॥ जागृहि जागृहि ॥

आशया बद्ध्यते लोकः कर्मणा परिबद्ध्यते ।
आयुःक्षयं न जानाति तस्मात् जागृहि जागृहि ॥

जन्मदुःखं जरादुःखं जायादुःखं पुनः पुनः ।
अंतकाले महादुःखं तस्मात् जागृहि जागृहि ॥

कामक्रोधौ लोभमोहौ देहे तिष्ठन्ति तस्कराः ।
ज्ञानरत्नापहाराय तस्मात् जागृहि जागृहि ॥

ऐश्वर्यं स्वप्नसंकाशं यौवनं कुसुमोपमम् ।
क्षणिकं जलमायुश्च तस्मात् जागृहि जागृहि ॥